# श्री मातृकापीठः

## द्वितीय भाग - (संस्कृत्)



श्री काँची कामकोटि सेवा ट्रस्ट
इक्कावन शक्ति पीठ,
कोटीश्वर रोड,
अम्बाजी, गुजरात - ३८५ ११०

# पञ्चाशत्पीठरहस्यम्

श्रीमातृका पीठान्यधिकृत्य तमिलभाषायां पुस्तिका एका प्रकाशिता अहमदबादनगरस्थया श्रीकाञ्चीकामकोटि सेवाट्रस्ट् संस्थया । श्रीमत्परमहंस परिव्राजकाः श्री काञ्चीकामकोटिपीठाधिपाः जगद्गुरवः श्रीशङ्कराचार्याः श्री जयेन्द्रसरस्वतीश्रीचरणाः, तदन्तेवासिनो जगद्गुरवः श्री शङ्करविजयेन्द्रसरस्वती श्रीचरणाश्च पञ्चाशत्पीठविषयकान् मन्त्रतन्त्रग्रन्थगतान् पौराणिकांश्च भागान् एकत्र सङ्गृह्य प्रकाशयितुं आदिष्टवन्तः ।

तत्र बहुधा विस्तृतोऽयं भागो जटिलश्च । अक्षराधिष्ठात्रीभिः योगिनीभिः अधिष्ठितानि पीठानि, तासां योगिनीनां विविधानि ध्यानमङ्गलानि रूपाणि, सतीदेव्याः विष्णुचक्रच्छिन्नाङ्गजातपातपूतानि पीठान्युपपीठानि च, तेषां स्थानानि, अद्यत्वे तेषां परिचयः इति, विषयो जटिलो यद्यपि, तथापि तद्विषयकानुसन्धाने दत्तक्षणेन मया, इतस्ततो गृहीतो मधुकोशो यावदुपलब्धः साधकानां भक्तानां पुरतो निवेद्यते इदानीं, यत्र काञ्ची कामकोटि पीठाधीशश्रीचरणानां पूर्णोऽनुग्रहः मम मार्गं अदर्शयत् । शिष्टं बहु । तत्रापि स सहचरन् कर्मण्यं मां करोत्विति प्रार्थये ।

२२. वीरेश्वरं अप्रोच् रोड्
श्रीरङ्गम् - ६२०००६.

विदुषां विधेयः
राधाकृष्ण शास्त्री

# १. अकार मातृकापीठ रूपिणी

## अं अमृता - अजामुखी

## अं



अं ॐ ह्रीं श्रीं अं अजामुखी रक्तवर्णा हंसगा धवलांशुका।
शरासनं वरं दक्षे धत्ते वामे शराऽभयौ॥

# १. अकार मातृकापीठ रूपिणी

**अं अमृता - अजामुखी**

## अं

**अं ॐ ह्रीं श्रीं अं अजामुखी रक्तवर्णा हंसगा धवलांशुका।**
**शरासनं वरं दक्षे धत्ते वामे शराऽभयौ॥**

**–सिद्धशाबर तन्त्रे।**

**अ-कारः केशवो विष्णुः श्रीकण्ठोऽपि खरादिकः।**
**मस्तकश्च ललाटश्च ह्रस्वश्च वरवर्णिनि!॥**

**(मन्त्राभिधानम्)**

**अः श्रीकण्ठः मुरेशश्च ललाटश्चैकमातृकः।**
**पूर्णोदरी सृष्टिमेधौ सारस्वतः प्रियम्वदः॥**

**महाब्राह्मी वासुदेवी धनेशः केशवोऽमृतम्।**
**कीर्त्तिर्निर्वृत्तिर्वागीशो नरकारिर्हरो मरुत्॥**

**ब्रह्मा वामाऽग्यजो ह्रस्वः करसूः प्रणवाद्यकः।**
**ब्रह्माणी कामरूपश्च कामेशी वासिनी वियत्॥**

**विश्वेशः श्रीविष्णुकण्ठौ प्रतिपत्तिः स्थिरं शिनी।**
**अर्कमण्डलवर्णाद्यौ ब्राह्मणः कामकर्षिणी॥**

**(प्रकारान्तरमन्त्राभिधानम्।)**

**श्रीकण्ठः केशवःकण्ठः निवृत्तिश्च स्वरादिकः।**
**अ-कारो मातृकश्चैव वात इत्यपि कीर्त्तितः॥**

**(मातृका निघण्टुः)**

---

अकारः कामरूपाख्यमादिपीठं तदुच्यते। यस्मिन्पीठे मपा देवि कुलमार्गः प्रवर्तितः। तत्र ते पतिता योनिस्तां दृष्ट्वा तत्प्रियं कृतम्। कुलशास्त्रं तु कौलानां ज्ञानिनां मुक्तिदायकम्। पश्चमानां द्रुतं सिद्धिरन्येषां नैव जायते। तद्द्रष्टुं ह्यणिमा दीनां सिद्धिकामैश्च गम्यताम्। श्रीविद्यायास्तु तन्मूलं मासि मासि क्षरेद्रजः। कुलसिद्धस्य लोपे तु रजःस्तम्भः प्रजायते। अस्योपपीठद्वितयं समन्तात्तव सूचनात्। वंशाख्यं लोमतो जातं सिद्धिः शाबरचेरकी। (मेरुतन्त्रम्)

# २. आकारमातृकापीठरूपिणी

आं आकर्षिणी - अथर्विणी

## आं



आकाराख्याथर्विणी तु श्यामशुक्लांबराशुगा ।
धत्ते खड्गं च खेटं च क्रमेणैव वराभयौ ॥

# २. आकारमातृकापीठरूपिणी

### आं आकर्षिणी - अथर्विणी

## आं

आकाराख्याथर्विणी तु श्यामशुक्लांबराशुगा।
धत्ते खड्गं च खेटं च क्रमेणैव वराभयौ॥

—सिद्धशाबर तन्त्रे।

आ प्रतिष्ठा मुखं दीर्घं नारायणोऽप्यनन्तकः।

(मन्त्राभिधानम्)

आकारो विजयाऽनन्तौ दीर्घच्छायो विनायकः।
क्षीरोदधिः पयोदश्च पाशो दीर्घास्यवृत्तकौ॥
प्रचण्ड एकजो रुद्रो नारायण इभेश्वरः।
प्रतिष्ठा मानदाकान्तो विश्वान्तकगजान्तकौ॥
पितामहो द्विठान्तो भूः क्रिया कान्तिश्च सम्भवः।
द्वितीया मानदा काशी विघ्नराजः कुजो वियत्।
स्वरान्तकश्च हृदयमङ्गुष्ठो भगमालिनी॥

(प्रकारान्तरमन्त्राभिधानम्।)

नारायणस्तथानन्तो मुखवृत्तं गुरुस्तथा।
विष्णुशय्या तथा शेषो दीर्घ आ-कार एव च॥

(मातृका निघण्टुः)

---

आकारः काशिका पीठस्त्वद्दत्तो भेदतां गतः। प्रलयेपि न नाशोस्य यत्प्रोक्तस्स महेश्वरः। न पापं यत्र पुण्यं न देहत्यागात्परं पदम्। द्वयमेव फलं तत्र मुक्तिस्तस्योपपीठके। यातना भैरवी याया तत्र पीठे पदेपदे। मया न शक्यते पातुं तत्र ते स्तनकुम्भतः। निःसृतं धारयोर्युग्मं सासिश्च वरुणाभवत्। काश्यां बहिर्योजनैकं देवभूमिरिति स्मृता। तत्र चाराधिता मन्त्रास्तत्कालं फलदायकाः। यथास्थानं चतुर्दिक्षु तत्र ह्याम्नायदेवताः। तिष्ठन्ति देवास्तत्सिद्धिः पुरश्चरणमात्रतः। गङ्गायाः परपारीणः काशीभागः पवित्रतः। व्यासशापेन तज्जातं गर्दभक्षेत्रमद्भुतम्। तत्कालं तत्र संसिद्धिस्तत्राम्नायस्य जायते। उपपीठमसेस्तीरे सारनाथस्तु दक्षिणः। तत्र दक्षिणमार्गस्य मन्त्राः सिद्धिप्रदायकाः। वरुणायाः सौम्यभागे सारनाथ- स्तथोत्तरः। तच्चो पपीठं वामस्य मार्गस्यातीव सिद्धिकृत्। (मेरुतन्त्रम्)

# ३. इकार मातृकापीठ रूपिणी

### इं इन्द्राणी इलादेवी

### इं

इकाराख्या त्विला देवी श्वेता मत्तेभगा शुभा।
चन्द्रहास वरौ दक्षे वामे धत्ते गदाभयौ ॥

# ३. इकार मातृकापीठ रूपिणी

इं इन्द्राणी इलादेवी

इं

इकाराख्या त्विला देवी श्वेता मत्तेभगा शुभा ।
चन्द्रहास वरौ दक्षे वामे धत्ते गदाभयौ ॥

—सिद्धशाबर तन्त्रे ।

इ-कारी माधवः सूक्ष्मो दक्षनेत्रश्च लोचनम् ॥

(मन्त्राभिधानम् ।)

इःसूक्ष्मा शाल्मली विद्या चन्द्रः पूषा सुगुह्यकः ।
सुमित्रं सुन्दरी वीरः कोटरः काटरः पयः ॥

भ्रूमध्यो माधवस्तुष्टिर्दक्षनेत्रश्च नासिका ।
शान्तः कान्तः कामिनी च कामी विघ्नविनायकः ।
नेपाली भरणी रुद्रो नित्या क्लिन्ना च पावकः ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

माधवः सूक्ष्मसंज्ञश्च विद्या दक्षिणलोचनम् ।
गन्धर्वः पाञ्चजन्यश्च इ-कारश्च मखाङ्कुरः ॥

(मातृका निघण्टुः)

---

नेपालं तु इकारस्स्याद्गुह्यं तत्र तु पार्वति । तस्माद्वामस्य मार्गस्य मूलस्थानं तदुच्यते । षट्पञ्चाशल्लक्षमिता भैरव्यो भैरवास्तथा । शक्तीनां च सहस्रे द्वे पीठानां च शतत्रयम् । चतुर्दश श्मशानानि तत्र सन्निहितानि च । दक्षमार्गे सिद्धिदानि पीठान्यष्टौ च तत्र तु । सिद्धिर्वैदिकमन्त्राणां तत्र पीठचतुष्टये । तन्मलं यत्र पतितं जातं तदुपपीठकम् । नेपालात्पूर्वदिशो तत्किरातैरुपवेष्टितम् । त्रिंशत्तत्र सहस्राणि देवयोनीनि सन्ति हि । (मेरुतन्त्रम्)

# ४. श्री ईकार मातृकापीठ रूपिणी

## ई ईशिनी देवी - ईश्वरी

ईं



ईश्वरी स्वर्णवर्णाभा वृषारूढा सितांशुका।
शारिकां च वरं दक्षे वामे धत्तेंकुशाभयौ ॥

# ४. श्री ईकार मातृकापीठ रूपिणी

## ई ईशिनी देवी - ईश्वरी

### ईं

ईश्वरी स्वर्णवर्णाभा वृषारूढा सितांशुका।
शारिकां च वरं दक्षे वामे धत्तेंकुशाभयौ ॥

—सिद्धशाबर तन्त्रे।

ई-गोंविन्दस्त्रिमूर्त्तिः स्याद्वामाक्षि कमला कला।
माया लक्ष्मी रतिः शान्तिर्वैष्णवी बिन्दुमालिनी ॥

(मन्त्राभिधानम्)

ई त्रिमूर्त्तिर्महामाया लोलाक्षी वामलोचनम्।
गोविन्दः शेखरः पुष्टिः सुभद्रा रत्नसंज्ञकः ॥

विष्णुर्लक्ष्मीः प्रहासश्च वाग्विशुद्धः परापरः।
कालोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः ॥

शिवोत्तमः शिवा तुष्टिश्चतुर्थी विन्दुमालिनी।
वैष्णवी वैन्दवी जिह्वा कामकला सनादका ॥

पावकः कोटरः कीर्त्तिर्म्मोहिनी कालकारिका।
कुचद्वन्द्वं तर्ज्जनी च शान्तिस्त्रिपुरसुन्दरी ॥

(प्रकारान्तरमन्त्राभिधानम्।)

गोविन्दश्च त्रिमूर्त्तीशः शान्तिः स्याद्वामलोचनम्।
नृसिंहाख्वं तथा माया ई-कारोऽपि सुरेश्वरः ॥

(मातृका निघण्टुः)

---

ईकारस्य समुत्पत्तिस्थानं स्याद्रौद्रपर्वतम्। पतितं वामनेत्रं ते महत्पीठं तदुच्यते। यस्य कस्यापि मन्त्रस्य जपात्सिद्धिः प्रजायते। वामाचारात्तत्र देवा देवतादर्शनं भवेत्। (मेरुतन्त्रम्)

## ५. श्री उकार मातृकापीठ रूपिणी

### उ उमादेवी - उग्रादेवी

### उ

उग्रादेवी ह्युकाराख्या षड्भुजा सिंहगा सिता।
दक्षे शूलांकुशवरान् वामे पाशगदाऽभयान्॥

# ५. श्री उकार मातृकापीठ रूपिणी

उ उमादेवी - उग्रादेवी

उं

उग्रादेवी ह्युकाराख्या षड्भुजा सिंहगा सिता।
दक्षे शूलांकुशवरान् वामे पाशगदाऽभयान्॥

—सिद्धशाबर तन्त्रे।

उः शिवः प्रणवं विष्णुर्दक्षकर्णोऽमरेश्वरि !

(मन्त्राभिधानम्)

उःशङ्करो वर्त्तुलाक्षी भूतः कल्याणवाचकः।
अमरेशो दक्षकर्णः षड्वक्त्रो मोहनः शिवः॥

उग्रप्रभुर्धृतिर्विष्णुविश्वकर्म्मा महेश्वरः।
शत्रुघ्नश्चेटिका पुष्टिः पञ्चमी वह्निवासिनी॥

कामघ्नः कामना चेशो मोहिनी विघ्नहृन्मही।
उटसूः कुटिला श्रोचं पारद्वीपो वृषो हरः॥

(प्रकारान्तरमन्त्राभिधानम्।)

अमरेशस्तथा विष्णुरिन्धिका च गजाङ्कुशः।
दक्षकर्णश्च विजय उ-कारो मन्मथाभिधः॥

(मातृका निघण्टुः)

---

उकारस्य समुत्पत्तिस्थानं काश्मीरमीरितम्। कर्णो निपतितो वामस्तस्मात्पीठोत्तमं तु तत्। यस्य कस्यापि देवस्य तं तं मन्त्रं जपेन्नरः। विद्यानां पारदर्शी स्यात्तत्त्वज्ञानी भवेत्तथा। वैदिकाद्वा कौलिकाद्वा स्मार्ताद्वा दक्षमार्गतः। च्युतानां तत्र देवेशि प्रायश्चित्तकराणि च। मया कृतानि तीर्थानि सद्यः प्रत्ययदान्यपि। करिष्याम्यतिगुप्तानि कलौ म्लेच्छावृतानि च। (मेरुतन्त्रम्)

## ६. श्री ऊकार मातृकापीठ रूपिणी

ॐ ऊर्ध्वकेशीदेवी - ऊर्जस्वलादेवी

ऊ



ऊकारोर्जस्वला देवी शार्दूलवरवाहना।
रक्ता चतुर्भुजा धत्ते खड्ग खेट वराऽभयान्॥

# ६. श्री ऊकार मातृकापीठ रूपिणी

ॐ ऊर्ध्वकेशीदेवी - ऊर्जस्वलादेवी

ऊं

ऊकारोर्जस्वला देवी शार्दूलवरवाहना।
रक्ता चतुर्भुजा धत्ते खड्ग खेट वराऽभयान्॥

—सिद्धशाबर तन्त्रे।

ऊ-रर्घीशो वामकर्णः कथितो मधुसूदनः॥

(मन्त्राभिधानम्)

ऊः कण्टको रतिः शान्तिः क्रोधनो मधुसूदनः।
कामराजः कुजेशश्च महेशो वामकर्णकः॥
अर्घीशो भैरवः सूक्ष्मो दीर्घघोणा सरस्वती।
विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी।
महाविद्येश्वरी षष्ठा षण्डो भूः कान्यकुब्जकः॥

(प्रकारान्तरमन्त्राभिधानम्।)

अर्घीशो दीपिका वामश्रवणो मधुसूदनः।
इन्द्रश्चापः षण्मुखश्च ऊ-कारो रक्षणाभिधः॥

(मातृका निघण्टुः)

---

ऊकारस्य समुत्पत्तिस्थानं स्यात्कान्यकुब्जकम्। तत्र ते दक्षकर्णस्तु पतितोऽतीव-शोभनः। गङ्गायमुनयोर्मध्ये तदन्तर्वेदिसंज्ञितम्। तत्क्षेत्रं सोमपानां हि निवासायोपकल्पितम्। तत्र ब्रह्मादयो देवाः स्वस्वतीर्थानि चक्रिरे। तत्र वैदिकमन्त्राणां सिद्धिर्देवाः पदेपदे। तस्य देवि मलाज्जातं यमुनातटमास्थितम्। इन्द्रप्रस्थं नाम लोके प्रसिद्धमुपपीठकम्। ब्रह्मणा विस्मृता वेदा यत्पीठस्य प्रभावतः। पुनर्लब्धास्ततो जातं तीर्थं निगमबोधकम्। तत्र काली तपस्तेपे तोषयिष्यन्ति ये च माम्। पञ्चमैस्तदयुक्ता वा तद्भवेधद्धरेच्छया। सा तु तत्र वरं प्राप्य महाकालाज्जगत्तदा। पञ्चमे प्रेरयामास सिद्धिं च प्रकटा ददौ। (मेरुतन्त्रम्)

# ७. श्री ऋकार मातृकापीठ रूपिणी

## ऋ ऋद्धिदायीदेवी - ऋतुधामादेवी

## ऋ



ऋतुधामा ऋकाराख्या रक्तवर्णा वृषस्थिता।
दक्षे पाशवरौ धत्ते तथा वामेंकुशाभयौ॥

# ७. श्री ऋकार मातृकापीठ रूपिणी

ऋ ऋद्धिदायीदेवी - ऋतुधामादेवी

ऋं

ऋतुधामा ऋकाराख्या रक्तवर्णा वृषस्थिता।
दक्षे पाशवरौ धत्ते तथा वामेंकुशाभयौ ॥

—सिद्धशाबर तन्त्रे।

ऋ-र्नासा दक्षनासा च भावभूतिस्त्रिविक्रमः।

(मन्त्राभिधानम्)

ऋः पूर्दीर्घमुखी रुद्रो देवमाता त्रिविक्रमः।
भावभूतिः क्रिया क्रूरा रेचिका नासिका धृतः ॥

एकपादः शिरो माला मण्डला शान्तिनी जलम्।
कर्णः कामलभा मेदो निवृत्तिर्गणनायकः ॥

रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी ॥ २५ ॥

(प्रकारान्तरमन्त्राभिधानम्।)

रेचिका दक्षनासा च भारभूतिस्त्रिविक्रमः।
देवमाता रिपुघ्नश्च ऋ-कारस्तपनः स्मृतः ॥

(मातृका निघण्टुः)

---

ॠकारोऽभू- त्पूर्णगिरौ पतिता तत्र नासिका। अतो योगस्य संसिद्धिस्तत्र पूर्णा प्रजायते। तत्र प्रत्यक्षतां यांति मन्त्राधिष्ठानदेवताः। (मेरुतन्त्रम्)

# ८. श्री ॠकार मातृकापीठ रूपिणी

## ॠकारादेवी - रेणुकादेवी

## ॠं



ॠकाराख्या रेणुकेयं षडास्या षड्भुजा सिता ।
शूलं पाशं वरं दक्षे वामे खड्गगदाऽभयान् ।
दधाना रक्त सिंहस्था क्रूरा लोक भयंकरी ॥

# ८. श्री ॠकार मातृकापीठ रूपिणी

## ॠकारादेवी - रेणुकादेवी

## ॠं

ॠकाराख्या रेणुकेयं षडास्या षड्भुजा सिता।
शूलं पाशं वरं दक्षे वामे खड्गगदाऽभयान् ।
दधाना रक्त सिंहस्था क्रूरा लोक भयंकरी ॥

—सिद्धशाबर तन्त्रे।

ॠ-कारो वामनासा च वामनोद्यदधीश्वरः ॥

(मन्त्राभिधानम्)

ॠः क्रोधोऽतिथीशो वाणी वामनः श्रीश्च गोधृती।
ऊर्ध्वमुखी निशानाथः पद्ममाला विनष्टधीः ॥
शशिनी मोचिका श्रेष्ठा दैत्यमाता प्रतिष्ठिता।
एकदन्ताह्वयो माता हरिता मिथुनोदया ॥
कोमलः श्यामला मेधी प्रतिष्ठा पतिरष्टमी।
ब्रह्मण्यमपि कीलालं पावको गन्धकर्षिणी ॥

(प्रकारान्तरमन्त्राभिधानम्।)

अतिथीशो वामनश्च मोचिका वामनासिका।
दैत्यमाता च दैवज्ञः ॠ-कारस्त्रिपुरान्तकः ॥

(मातृका निघण्टुः)

---

ऋकारस्य समुत्पत्तिस्थानं स्यादर्बुदाचलः । वामस्ततो निपतितस्त्वत एव च वल्लभः । शक्तिस्तत्राम्बिका नाम स्वस्वाचारप्रिया सदा। पुरश्चर्या यदैकापि भोगकाले प्रजायते। तस्मिन्पीठे भवेन्मुक्तिस्सहस्रभगसङ्गमात्। दिव्यस्त्रीणां तु तत्स्थानं तेऽवतारस्य पार्वति। प्रतिज्ञा महती जाता तया देव्या मया सह। निर्वाहयेन्मम क्षेत्रे ब्रह्मचर्य्यन्तु यः पुमान्। द्वादशाब्दन्तु मद्भर्ता स एवैको भविष्यति। बौद्धोपि स्खलितस्तत्र त्रिदिनोनैकवत्सरे। निर्वाहस्तत्र वामस्य दक्षे विघ्ना भवन्ति हि। (मेरुतन्त्रम्)

# ९. श्री लृकार मातृकापीठ रूपिणी

## लृ लृकारदेवी - लृतुम्बरा देवा

## लृं



लृतंभरा लृकाराख्या श्यामा व्याघ्र वरस्थिता।
चतुर्मुखाऽष्टाहस्तेयं धत्तेस्त्राणि करैः परैः ॥
त्रिशूलं पाशडमरु वरान् वाम करै स्तथा।
खड्गं कपाल मुसलाऽभयान्पीताम्बरा शुभा ॥

# ९. श्री लृकार मातृकापीठ रूपिणी

## लृ लृकारदेवी - लृतुम्बरा देवी

## लृं

लृतंभरा लृकाराख्या श्यामा व्याघ्र वरस्थिता ।
चतुर्मुखाऽष्टाहस्तेयं धत्तेस्त्राणि करैः परैः ॥
त्रिशूलं पाशडमरु वरान् वाम करै स्तथा ।
खड्गं कपाल मुसलाऽभयान्पीताम्बरा शुभा ॥

—सिद्धशाबर तन्त्रे ।

लृः स्थाणुर्दक्षगुल्फस्थो गण्डाख्यः श्रीधरोऽपि च ।

(मन्त्राभिधानम्)

लृः स्थाणुः श्रीधरः शुद्धो मेधा धूम्रो बको वियत् ।
देवयोनिर्दक्षगण्डो वहेशः कौन्तरुद्रकौ ॥
विश्वेश्वरो दीर्घजिह्वा महेन्द्रो लाङ्गलिः परा ।
चन्द्रिका पार्थिवो धूम्रा द्विदन्तः कामवर्धनः ॥
शुचिस्मिता च नवमी कान्तिरावातकेश्वरः ।
चित्ताकर्षिणी काशश्च तृतीयः कुलसुन्दरी ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

श्रीधरश्चामरः स्थाणुर्दक्षगण्डस्त्रिवेदकः ।
एकाङ्घ्रिर्व्वज्रदण्डश्च व्योमार्घं लृ-स्वरः स्मृतः ॥

(मातृका निघण्टुः)

---

लृकारस्य समुत्पत्तिर्यत्र चाम्रातकेश्वरः । दक्षो गण्डो निपतितस्तत्पीठे महदद्भुतम् । धनदाद्यास्तत्र यक्षा यक्षिण्यो धनदादिकाः । वसन्ति तत्र जपतस्तेषां सिद्धिः प्रजायते । (मेरुतन्त्रम्)

# १०. श्री लॄकार मातृकापीठ रूपिणी

## लॄकारादेवी - लॄम्विकादेवी

## लॄं



लॄकारा लॄञिकारव्यैषा पुष्पदन्त गजास्थिता ।
रक्ता दश भुजार्धेन दक्षादि क्रमशः करैः ।
त्रिशूलं पाशमुसलं चन्द्रहास वरान् शुभान्
वामैः करैः खड्गखेट गदा शक्त्यभयांस्तथा ॥

## १०. श्री लॄकार मातृकापीठ रूपिणी

### लॄकारादेवी - लृम्बिकादेवी

### लॄं

लॄकारा लॄञ्जिकाख्यैषा पुष्पदन्त गजस्थिता।
रक्ता दश भुजार्धेन दक्षादि क्रमशः करैः।
त्रिशूलं पाशमुसलं चन्द्रहास वरान् शुभान्
वामैः करैः खड्गखेट गदा शक्त्यभयांस्तथा॥

—सिद्धशाबर तन्त्रे।

लॄ-कारोऽपि हृषीकेशो हरोऽसौ वामगण्डकः॥

(मन्त्राभिधानम्)

लॄकारः कमला हर्षा हृषीकेशो मधुव्रतः।
सूक्ष्मा कान्तिर्वामगण्डो रुद्रः कामोदरी सुरा॥
कान्तिकृत् स्वस्तिका शक्रो मायावी लोलुपो वियत्।
दशमी सुस्थिरो माता नीलपीतो गजाननः॥
कामिनी विश्वपा कालो नित्या शुद्धा शुचिः कृती।
सूर्य्या धैर्य्याकर्षणी च एकाकी दनुजप्रसूः॥

(प्रकारान्तरमन्त्राभिधानम्।)

हृषीकेशो हरः सूक्ष्मो वामगण्डः कुबेरदृक्।
अर्धर्चो नीलचरण लॄ-कारश्च त्रिकण्ठकः॥

(मातृका निघण्टुः)

---

लॄकारस्य समुत्पत्तिरेकाम्रे तु पुराभवत्। नखास्ते गलितास्तत्र तप्तं विद्याधरैर्बहु। विद्यार्थिनान्तु तत्पीठमिष्टविद्याविधायकम्। अश्रुतो बुध्यते ग्रन्थस्तत्र सारस्वताज्जपात्। (मेरुतन्त्रम्)

# ११. श्री एकार मातृकापीठ रूपिणी

## एं एकपादादेवी - रेवतीदेवी

एं



एकाराख्या रेवती स्यात् दशास्या रुण्डमालिनी ।
रक्ता विंशद्भुजा सिंहवाहना फाल लोचना ॥
करैर्धत्ते चक्र शूल पाश खड्ग कमण्डलान् ।
अक्षसूत्रं च चिन्मुद्रां भुशुण्डीं मुद्गरं वरम् ॥
वामे धत्ते करैश्शंखं भिण्डीन्दुमृग खेटकान् ।
कपालं दहनं शोषं दण्डं चैव गदाऽभयौ ॥

# ११. श्री एकार मातृकापीठ रूपिणी

## एं एकपादादेवी - रेवतीदेवी

## एं

एकाराख्या रेवती स्यात् दशास्या रुण्डमालिनी ।
रक्ता विंशद्भुजा सिंहवाहना फाल लोचना ॥
करैर्धत्ते चक्र शूल पाश खड्ग कमण्डलान् ।
अक्षसूत्रं च चिन्मुद्रां भुशुण्डीं मुद्गरं वरम् ॥
वामे धत्ते करैश्शंखं भिण्डीन्दुमृग खेटकान् ।
कपालं दहनं शोषं दण्डं चैव गदाऽभयौ ॥

—सिद्धशाबर तन्त्रे ।

ए-कारो विजया शक्तिर्भगसंज्ञाभिधायकः ।
पद्मनाभो महेशानि ! प्रोक्तो झिण्टीशनायकः ॥

(मन्त्राभिधानम्)

ए-कारो वा(ग्भ)स्तवः शक्तिर्झिण्टीशोऽष्ठो भगो मरुत् ।
सूक्ष्मभूतोर्ध्वकेश्यौ च ज्योत्स्ना श्रद्धा प्रमर्दनः ॥
भयं ज्ञानं कृशा धीरा जङ्घा सर्वसमुद्भवः ।
वह्निर्विष्णुर्भगवती कुण्डली मोहिनी रसः ॥
योषिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः ।
सन्धिरेकादशी भद्रा पद्मनाभः कुलाचलः ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

झिण्टीशः पद्मनाभश्च शक्तिर्दक्षः क्षमाऽमृतम् ।
भग ऊर्ध्वं कामरूप ए-कारश्च त्रिकोणकः ॥

(मातृका निघण्टुः)

---

एकारजन्म त्रिस्रोते पातिता त्रिवली तव । त्रिधाते वसनं जातं प्राक्पश्चाद्दक्षिणेपतत् । त्रीणि तान्युपपीठानि गृहस्थस्तत्र सिद्ध्यति । द्विजश्च नेतरो वर्णो मनवः पौष्टिके स्थिताः । (मेरुतन्त्रम्)

# १२. श्री ऐकार मातृकापीठ रूपिणी

## ऐं ऐश्वर्यात्मिकादेवी - शुष्करेवतीदेवी

## ऐं



ऐकाराख्या शुष्कपूर्वा रेवती त्रिशिराहिता ।
मयूरगा षड्भुजेयं रक्त केशैश्च संवृता ॥
अर्थैर्धत्ते करैश्चक्रं त्रिशूलं च वरं तथा ।
वामैः शंखं गदां गुर्वीं करैर्धत्तेऽभयं तथा ॥

## १२. श्री ऐकार मातृकापीठ रूपिणी

### ऐं ऐश्वर्यात्मिकादेवी - शुष्करेवतीदेवी

### ऐं

ऐकाराख्या शुष्कपूर्वा रेवती त्रिशिराहिता ।
मयूरगा षड्भुजेयं रक्त केशैश्च संवृता ॥
अर्धैर्धत्ते करैश्चक्रं त्रिशूलं च वरं तथा ।
वामैः शंखं गदां गुर्वी करैर्धत्तेऽभयं तथा ॥

—सिद्धशाबर तन्त्रे ।

ऐ-कारो भौतिकश्चैव दामोदरोऽधराह्वयः ।
अष्टस्वरोऽपि विज्ञेयो हिमपर्वतकन्यके ! ॥

(मन्त्राभिधानम्)

ऐं-र्लज्जा भौतिकः कान्ता वायवी मोहिनी विभुः ।
दक्षा दामोदरः प्रज्ञाऽधरो विकृतमुख्यपि ॥
क्षमात्मको जगद्योनिः परः परनिबोधकृत् ।
ज्ञानामृता कपर्दी श्रीः पीठेशोऽग्निः समातृकः ॥
त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनः ।
महेश्वरी द्वादशी च विमलश्च सरस्वती ॥
कामकोटी वामजानुरंशुमान् विजया जटा ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

ज्ञानामृतो भौतिकश्च धरा दामोदरस्तथा ।
वागीशो वर्म्मभरद ऐ-कारस्त्रिपुरस्तथा ॥

(मातृका निघण्टुः)

---

ऐकारोभूत्कामकोटे नाभिस्तत्र तु तेऽपतत् । तत्र सर्वेपि सिद्ध्यन्ति काममन्त्रा न संशयः । कामनीं त्वां समाराध्य च्छाछिकातीरसङ्गताम् । षोडशस्त्रीसहस्राणां भोगे सामर्थ्यवान्भवेत् । चतुर्दिक्षूपपीठानि तत्र जातानि पार्वति । स्थानमप्सरसां तत्र ये मन्त्राः स्त्रीप्रसङ्गिकाः । सर्वे ते तत्र सिद्ध्यन्ति क्षिप्रमेव न संशयः । दर्शनेनापि लभते सिद्धिमिष्टां मनोरमाम् । (मेरुतन्त्रम्)

# १३. श्री ओंकार मातृकापीठ रूपिणी

## ओङ्कारा देवी - अश्विनी देवी

## ओ



ओंकारा त्वश्विनी देवी रक्तवर्णा षडानना।
मयूरगाऽर्कबाहुः स्यात् धत्ते दक्षेंकुशं शरम्॥
खड्गं पाशं च चिन्मुद्रां दरं च केकरेक्षणा।
वामे शूलं कार्मुकं च खेटं मुसलमेव च॥
पुस्तकं चाभयं चैव सर्वशत्रु भयङ्करी॥

# १३. श्री ओंकार मातृकापीठ रूपिणी

## ओङ्कारा देवी - अश्विनी देवी

## ओं

ओंकारा त्वश्विनी देवी रक्तवर्णा षडानना।
मयूरगाऽर्कबाहुः स्यात् धत्ते दक्षेंकुशं शरम्॥
खड्गं पाशं च चिन्मुद्रां दरं च केकरेक्षणा।
वामे शूलं कार्मुकं च खेटं मुसलमेव च॥
पुस्तकं चाभयं चैव सर्वशत्रु भयङ्करी॥

–सिद्धशाबर तन्त्रे।

ओ-कारश्चोर्ध्वदन्तश्च सद्योजातश्च सत्यकः।
वासुदेवो महेशानि ! दन्तो मे परिकीर्त्तितः॥

(मन्त्राभिधानम्)

ओ-कारः सत्यपीयूषौ पश्चिमास्यः श्रुतिः स्थिरा।
सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः॥
आप्यायनी चोर्ध्वदन्तो लक्ष्मीर्वाणी सुखी द्विजः।
उद्देश्यदर्शकस्तीव्रः कैलासश्च सुधाकरः॥
प्रणवांशो ब्रह्मसूत्रमजेशः सर्व्वमङ्गला।
त्रयोदशी दीर्घनासा रतिनाथो दिगम्बरा॥
त्रैलोक्यविजया प्रज्ञा प्रीतिर्बीजादिकर्षिणी॥

(प्रकारान्तरमन्त्राभिधानम्।)

सद्योजातो वासुदेवो रुद्रो दन्तस्त्रिमात्रकः।
आप्यायनी मन्त्रनाथ ओ-कारो नगसंज्ञकः॥

(मातृका निघण्टुः)

---

ओकारोभूच्च कैलासे हिमाचलनगोदरे। अंगुल्यः पतितास्तत्र पर्वभिर्लिङ्गताङ्गताः। करमालिकया तत्र यंयं मन्त्रं जपेद्विजः। पुरश्चरणमात्रेण तुष्टा भवति देवता। (मेरुतन्त्रम्)

# १४. श्री औंकार मातृकापीठ रूपिणी

## औं औषधादेवी - अघोरदेवी

## औं

औकाराख्या ह्यघोरेयं कराली दीर्घ जिह्विका।
एकवक्त्रा वक्रनेत्रा भ्रुकुटी कुटिलेक्षणा ॥
नीलमेघ निभा रौद्री भेरंडवर वाहना।
षड्भुजार्धकरैः धत्ते शूलं खड्गं वरं तथा ॥
गदां खेटाभयान् वामे दधाना च महोदरी ॥

# १४. श्री औंकार मातृकापीठ रूपिणी

## औं औषधादेवी - अघोरदेवी

## औं

औकाराख्या ह्यघोरेयं  कराली दीर्घ जिह्विका।
एकवक्त्रा वक्रनेत्रा भ्रुकुटी कुटिलेक्षणा ॥
नीलमेघ निभा रौद्री भेरंडवर वाहना।
षड्भुजार्धकरैः धत्ते शूलं खड्गं वरं तथा ॥
गदां खेटाभयान् वामे दधाना च महोदरी ॥

—सिद्धशाबर तन्त्रे।

औ-कारो मनुराख्यातो दन्तान्तोऽधोरदाह्वयः।
सङ्कर्षणोऽपि देवेशि ! कथितोऽनुग्रहेश्वरः ॥

(मन्त्राभिधानम्)

औ-कारः शक्तिको नादस्तैजसो वामजङ्घकः।
मणिबन्धो ग्रहेशश्च शङ्कुर्वर्णः  सदाशिवः ॥
अधोदन्तश्च कण्ठोष्ठौ सङ्कर्षणः सरस्वती।
आज्ञा चोर्ध्वमुखी शान्तो व्यापिनी प्रकृतः पयः ॥
अनन्ता ज्वालिनी व्योमा चतुर्दशी रतिः प्रियः।
नेत्रमात्माकर्षिणी च ज्वाला मालिनिका भृगुः ॥

(प्रकारान्तरमन्त्राभिधानम्।)

सङ्कर्षणोऽनुग्रहेशो मुरारिर्व्यापिनी तथा।
अधोदन्तगतो मायी नृसिंहाङ्गं तथौस्वरः ॥

(मातृका निघण्टुः)

---

औकारस्य समुत्पत्तिर्भृगुपीठेऽभवत्पुरा। तत्र ते पतिता दन्तास्तत्पीठं महदद्भुतम्। समस्ता वैदिका मन्त्राः कल्पोक्ताश्च स्वरूपतः। तत्र तिष्ठन्ति सेवातस्सद्यःसिद्धा भवन्ति हि। (मेरुतन्त्रम्)

## १५. श्री अंकार मातृकापीठ रूपिणी

### अं अम्बिका देवी - अञ्जना देवी

### अं



अञ्जनाभाञ्जनादेवी पञ्चास्या जरठा कृशा ।
महोदरी महाव्याघ्र वरवाहनमास्थिता ॥
चतुर्भुजा शूलपाश वराभय करा मता ॥

# १५. श्री अंकार मातृकापीठ रूपिणी

## अं अम्बिका देवी - अञ्जना देवी

## अं

अञ्जनाभाञ्जनादेवी पञ्चास्या जरठा कृशा ।
महोदरी महाव्याघ्र वरवाहनमास्थिता ॥
चतुर्भुजा शूलपाश वराभय करा मता ॥

—सिद्धशाबर तन्त्रे ।

अनुस्वारश्च बिन्दुश्च दण्डो दण्डी वियद्भिदुः ।
प्रद्युम्नश्चाक्रूरश्चापि शीर्षश्च मरणं प्रिये ! ॥

(मन्त्राभिधानम्)

अङ्कारश्चक्षुषी दन्तो घटिका समगुह्यकः ।
प्रद्युम्नः श्रीमुखी प्रीतिर्बीजयोनिर्वृषध्वजः ॥
परं शशी प्रमाणीशः सोमो बिन्दुः कलानिधिः ।
अक्रूरश्चेतना नादः पूर्णा दुःखहरः शिवः ॥
शिरः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः ।
पूर्णिमा रेवती शुद्धः कन्याचररविर्वियत् ॥
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी ।
केदारो रात्रिनाथश्च कुब्जिका चैव बुद्बुदः ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

अक्रूरो व्योमरूपश्च प्रद्युम्नश्चन्द्रसंज्ञकः ।
अनुस्वारस्तथा बिन्दुरङ्कारश्च शिरोगतः ॥

(मातृका निघण्टुः)

---

अन्तु केदारसम्भूतं दक्षं करतलं तव । पतितं तत्र पीठे तु सिद्धयः करसंस्थिताः । तस्य दक्षे चोपपीठमगस्त्याश्रमसंज्ञितम् । कङ्कणं पतितं तत्र सर्वसिद्धिविधायकम् । तत्पश्चान्मुद्रिकायास्ते जातं तत्पीठमद्भुतम् । इन्द्राक्षी नाम यत्तत्र सेन्द्रेणोपासिता पुरा । त त्पश्चाद्रेवतीतीरे पतिता वलयस्तव । पतितोपि विमुच्येत राजराजेश्वरीति च । वामाचारेण तत्रापि सिद्धिस्तूर्णं प्रजायते । जपादेव तु यक्षिण्यास्तत्र स्युर्दृष्टिगोचराः । (मेरुतन्त्रम्)

# १६. श्री अःकार मातृकापीठ रूपिणी

## अः अक्षरादेवी - अजादेवी

## अः



अः काराख्या त्वजा देवी त्रिशिरा च त्रिलोचना।
रक्त पीताम्बरा क्रूरतरक्षुवरवाहना ॥
षड्भुजा शूल पट्टासि वरदान करान्विता।
वामेंकुश महाखेटाभयानृधत्ते करैः क्रमात् ॥

# १६. श्री अःकार मातृकापीठ रूपिणी

## अः अक्षरादेवी - अजादेवी

## अः

अः काराख्या त्वजा देवी त्रिशिरा च त्रिलोचना।
रक्त पीताम्बरा क्रूरतरक्षुवरवाहना ॥
षड्भुजा शूल पट्टासि वरदान करान्विता।
वामेंकुश महाखेटाभयान् धत्ते करैः क्रमात् ॥

—सिद्धशाबर तन्त्रे।

विसर्गः सर्ग आख्यातो विषद्विषममानसः।
अनिरुद्धो महासेनः कलाज्ञोऽपि रमापि च ॥

(मन्त्राभिधानम्)

अःकण्ठको महासेनः कला पूर्णामृता हरिः।
इच्छा भद्रा गणेशश्च रतिर्विद्या सुखं मुखम् ॥
द्विबिन्दूरसना सोमोऽनिरुद्धो दुःखसूचकः।
द्विजिह्वः कुण्डलं वक्त्रं सर्गः शक्तिर्निशाकरः ॥
सुन्दरी सुयशा नन्दा गणनाथो महेश्वरः ॥

(प्रकारान्तरमन्त्राभिधानम्।)

अनन्तश्च महासेनोऽनिरुद्धो रसवर्णकः।
कन्यास्तननिभः सर्गो विसर्गश्चान्तिमस्वरः ॥

(मातृका निघण्टुः)

---

अःकारोभूचन्द्रपुरे पतितो वामगण्डकः। तत्र सर्वेपि मनवस्सिद्ध्यन्त्यत्र न संशयः। (मेरुतन्त्रम्)

# १७. श्री ककार मातृकापीठ रूपिणी

## कं कालरात्री देवी - भूतविन्यासिनी

## कं



भूतविन्यासिनी शुभ्र  गजारूढा चतुर्भुजा ।
त्रिशूलं च वरं दक्षे वामेंकुशमथाऽभयम् ॥

# १७. श्री ककार मातृकापीठ रूपिणी

## कं कालरात्री देवी - भूतविन्यासिनी

## कं

भूतविन्यासिनी शुभ्रा गजारूढा चतुर्भुजा।
त्रिशूलं च वरं दक्षे वामेंकुशमथाऽभयम्॥

—सिद्धशाबर तन्त्रे।

कःक्रोधीशो मुखं चक्री व्रतदेवः सुरो रविः।

(मन्त्राभिधानम्)

कः क्रोधीशो महाकाली कामदेवः प्रकाशकः।
कपालतेजसी शान्तिर्वासुदेवो जयाऽनलः॥
चक्री प्रजापतिः सृष्टिर्दक्षस्कन्दो विशाम्पतिः।
अनन्तः पार्थिवो विन्दुस्तापिनी परमार्थकः॥
वर्गाद्यश्च(मु) सुखं ब्रह्मा स(सु)खाम्भोधिः शिरो जलम्।
माहेश्वरी तुलापुष्पं मङ्गलश्चरणं करः॥
नित्या कामेश्वरी मुख्यः कामरूपो गजेन्द्रकः।
श्रीपुरं रमणो वङ्गकुसुमा परात्मकः॥

(प्रकारान्तरमन्त्राभिधानम्।)

क्रोधीशो धातृसंज्ञश्च चक्री सृष्टिः करादिगः।
वर्गादिर्माया देवेशः क-कारः कामगः स्मृतः॥

(मातृका निघण्टुः)

---

श्रीपीठे तु ककारो भून्मस्तकं पतितं तव। प्रायस्तत्र सपापानां गमनं दुर्लभं कलौ। समस्ताः शक्तयो यत्र रमन्ते निशि चेच्छया। अप्रमत्तं न बाधन्ते विधर्मं भक्षयन्ति च। कर्णाभरणमतो जातमुपपीठं तु पूर्वतः। ब्राह्मी तत्र स्थिता शक्तिर्ब्रह्म- विद्याप्रकाशिका। कर्णार्धाभरणा-द्वह्निकोणेभूदुपपीठकम्। माहेश्वरी तत्र शक्तिर्मुखशुद्धकरा मता। पत्रवल्यस्तु तद्दक्षे पतितास्ते तदाभवत्। उपपीठं तत्र शक्तिः कौमारी जयकारिणी। कण्ठमाला तु नैर्ऋत्यां पतिता चोपपीठकम्। वैष्णव्यावस्थितं जातमिन्द्रजाले सुसिद्धिदम्। नासामुक्ता तु तत्पश्चात्पतिता चोपपीठकम्। वाराह्यधिष्ठितं जातं शत्रुमर्दन- कारकम्। मस्त काभरणं वायौ पतितं चोपपीठकम्। चामुण्डाधिष्ठितं जातं क्षुद्रदैवतसिद्धिदम्। केशाभरणतस्तेभूदैशान्यामुपपीठकम्। अधिष्ठितं महालक्ष्म्या सूक्तानां तत्र सिद्धये। (मेरुतन्त्रम्)

# १८. श्री खकार मातृकापीठ रूपिणी

## खं खण्डिता देवी-खद्योतिनी देवी

## खं



खञ्जरीटस्थिता पीता त्रिशिरा च त्रिशूलिनी ।
खाख्या खद्योतिनी खड्ग वराभयाकरा मता ॥

# १८. श्री खकार मातृकापीठ रूपिणी

## खं खण्डिता देवी-खद्योतिनी देवी

## खं

खञ्जरीटस्थिता पीता त्रिशिरा च त्रिशूलिनी।
खाख्या खद्योतिनी खड्ग वराभयाकरा मता ॥

—सिद्धशाबर तन्त्रे।

खश्चण्डो देवि ! चण्डेश ऋद्धिश्चैव तथा गदी।

(मन्त्राभिधानम्)

खः प्रचण्डः कामरूपी ऋद्धिर्व्वह्निः सरस्वती।
आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी गुरुः ॥

शिखण्डी दन्तजातीशः कफोनिर्गरुतो यतिः।
शुभ्राग्नेया चण्डलिङ्गो जनव्याहारखड्गकौ ॥

(प्रकारान्तरमन्त्राभिधानम्।)

ऋद्धिर्गदी च चण्डेशः खेटो दक्षिणकूर्परः।
कैटभश्चैव मातङ्गः संहारः खार्णकः स्मृतः ॥

(मातृका निघण्टुः)

---

खकारोभूत्तथोङ्कारे क्षेत्रे चामरकण्टके। त्वद्बाहुपतनात्पीठो नर्मदाधिष्ठितोऽभवत्। तत्र सर्वैर्मुनिवरैः प्रणतैः समुपासकैः। कृतं महत्तपो जाता जीवन्मुक्ता महर्षयः। तदुत्तरे चोपपीठं कञ्चुकीपतनादभूत्। ज्योतिष्मत्या निवासोसौ ज्योतिर्मन्त्रप्रकाशतः। वक्षो निपतितं तत्र जातं पीठं महाद्भुतम्। विख्यातो ज्वालया तत्र वह्निना च तपः कृतम्। स देव मुखतां प्राप्तः स्थितस्तस्योपपीठके। ज्वालामुखीति विख्यातं स वह्निर्देवतामुखम्। पुरश्चर्य्योक्तद्रव्यस्य पुरश्चरणसंख्यया। तत्र होमः प्रकर्तव्यो मन्त्रसिद्धिः प्रजायते। (मेरुतन्त्रम्)

## १९. श्री गकार मातृकापीठ रूपिणी

### गं गायत्री देवी - धूम्रा देवी

### गं



गाख्या धूम्रा चतुर्वक्त्रा सिंहस्थाष्टभुजा मता।
धूम्राभा दक्षिणे धत्ते शूलं पाशं शुकं वरम्।
वामे तु पुस्तकं कुण्डीम् कपालम भयं क्रमात्॥

# १९. श्री गकार मातृकापीठ रूपिणी

## गं गायत्री देवी - धूम्रा देवी

## गं

गाख्या धूम्रा चतुर्वक्त्रा सिंहस्थाष्टभुजा मता।
धूम्राभा दक्षिणे धत्ते शूलं पाशं शुकं वरम्।
वामे तु पुस्तकं कुण्डीम् कपालमभयं क्रमात्॥

—सिद्धशाबर तन्त्रे।

ग-कारो देवि ! शारङ्गी स्मृतिः पञ्चान्तकोऽपि च।

(मन्त्राभिधानम्)

गो गौरी गौरवो गङ्गा गणेशो गोकुलेश्वरः।
शार्ङ्गी पञ्चान्तको गाथा गन्धर्वः सर्वगः स्मृतिः॥

सर्वसिद्धिः प्रभा धूम्रा द्विजाख्यः शिवदर्शनः।
विश्वात्मा गौः पृथग्रूपा बालबद्धस्त्रिलोचनः॥

गीतं सरस्वती विद्या भोगिनी नन्दनो धरा।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः॥

(प्रकारान्तरमन्त्राभिधानम्।)

स्मृतिः पञ्चान्तकः शार्ङ्गी गणेशो मणिबन्धगः।
गोमुखो गजकुम्भश्च ग-कारः सिंहसंज्ञकः॥

(मातृका निघण्टुः)

---

गोरक्षेणतु तत्रैव प्राप्तं सिद्धयष्टकं पुरा। दर्शनादेव तन्नॄणां सर्वसिद्धिविधायकम्। (मेरुतन्त्रम्)

# २०. श्री घकार मातृकापीठ रूपिणी

## घं घण्टाकर्षिणी देवी

## घं



कृष्ण वर्णा घरूपाच सूकरास्या कृशोदरी।
षड्भुजा शूलखट्वांगवरान् दक्ष भुजैः क्रमात्।
वामे खड्गं तथा खेटं अभयं शत्रुभञ्जिनी॥

# २०. श्री घकार मातृकापीठ रूपिणी

## घं घण्टाकर्षिणी देवी

## घं

कृष्ण वर्णा घरूपाच सूकरास्या कृशोदरी।
षड्भुजा शूलखट्वांगवरान् दक्ष भुजैः क्रमात्।
वामे खड्गं तथा खेटं अभयं शत्रुभञ्जिनी॥

—सिद्धशाबर तन्त्रे।

घ-कारश्च महेशानि ! खड्गी चैव शिवोत्तमः।

(मन्त्राभिधानम्)

घः खड्गी घुर्घुरो घण्टी घण्टीशस्त्रिपुरान्तकः।
वायुः शिवोत्तमः सत्यं किङ्किणी घोरनादकः॥

मरीचिर्वरुणो मेधा कालरूपी च दाम्भिकः।
लम्बोदरा ज्वालमूलं नन्देशो हननं ध्वनिः॥
त्रैलोक्यविद्या संहर्त्ता कामाख्यमनघामयः॥

(प्रकारान्तरमन्त्राभिधानम्।)

खड्गी शिवोत्तमो मेधा दक्षिणाङ्गुलिमूलकम्।
घनो घनस्वरश्चैव घ-कारो ङादिमः स्मृतः॥

(मातृका निघण्टुः)

---

मालवं तु घकारस्य वामस्कन्धोत्र संस्थितः। उपासितं तु गन्धर्वैः रागज्ञान- कसञ्ज्ञितम्। (मेरुतन्त्रम्)

# २१. श्री ङ्कार मातृकापीठ रूपिणी

## ङं डार्णा देवी - अरुन्धती शक्तिः

ङ



अनन्त शक्ति - देवेशी रक्ता बर्हिण वाहना।
षडाननेषुचापासि खेट दानाभयान्विता ॥

## २१. श्री ङकार मातृकापीठ रूपिणी

ङ डार्णा देवी - अरुन्धती शक्तिः

ङ

अनन्त शक्ति - देवेशी रक्ता बर्हिण वाहना।
षडाननेषुचापासि खेट दानाभयान्विता ॥

–सिद्धशाबर तन्त्रे।

ङ-कारश्चैव रुद्रश्च शङ्खी चैव वरानने ! ॥

(मन्त्राभिधानम्)

ङःशङ्खी भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः।
एकरुद्रो दक्षनखः खर्परो विषयस्पृहा ॥

कान्तिः श्वेताह्वयो धीरो द्विजात्मा ज्वालिनी वियत्।
मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ॥

एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः।
शिवयोषा नीलकण्ठः कामेशी च मयांशुकौ ॥

(प्रकारान्तरमन्त्राभिधानम्।)

शङ्कोरुद्रकान्तिश्च दक्षाङ्गुल्यग्रसंस्थितः।
क्लीबवक्त्रश्च भद्रेशो ङ-कारश्चानुनासिकः ॥

(मातृका निघण्टुः)

---

कुलान्तके ङकरोभूत्कक्षो निपतितस्तव। द्वेषोच्चाटनमृत्यूनां प्रयोगास्तत्र सिद्धिदाः। (मेरुतन्त्रम्)

# २२. श्री चकार मातृकापीठ रूपिणी

## चं चण्डा देवी - सुषुमा देवी

## चं



सुषुमा चैकवक्त्रैषा हयारूढा चतुर्भुजा ।
खड्गखेट धरा चाख्या वराभयकरा शुभा ॥

# २२. श्री चकार मातृकापीठ रूपिणी

### चं चण्डा देवी - सुषुमा देवी

## चं

सुषुमा चैकवक्त्रैषा हयारूढा चतुर्भुजा।
खड्गखेट धरा चाख्या वराभयकरा शुभा ॥

—सिद्धशाबर तन्त्रे।

च-कारः कूर्चसंज्ञः स्यात् कथितश्च प्रिये! हली ॥

(मन्त्राभिधानम्)

चः पुष्करो हली वाणी चात्मशक्तिः सुदर्शनः।
चतुर्मुण्डधरश्चैव महिषाचारसम्बिनी ॥

एकरूपो रुचिः कूर्म्मश्चामुण्डा दीर्घबाहुकः।
वामबाहुर्मूलमाया चतुर्मूर्त्तिस्वरूपिणी ॥

दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलोचनः।
चन्दनं चन्द्रमा दैवश्चेतना वृश्चिको बुधः ॥

देवी कीटमुखीच्छात्मा कौमारी पूर्व्वफल्गुणी।
अनङ्गमेखला वायुर्म्मेदिनी च कुलावती ॥

(प्रकारान्तरमन्त्राभिधानम्।)

हली कूर्मेश्वरो लक्ष्मीर्वामबाहुर्दिशस्तथा।
चित्ताचारी चञ्चलश्च च-कारः स स्मृतो बुधैः ॥

(मातृका निघण्टुः)

---

कोट्टके च चकारोभूद्दामकक्षः प्रतिष्ठितः। लब्धा तु राक्षसैस्तत्र सिद्धिर्देवजयाभिधा। (मेरुतन्त्रम्)

## २३. श्री छकार मातृकापीठ रूपिणी

छं छयार्ता देवी - निर्जरा देवी

छं



छनिर्झरारुन्धतीयं पीता मर्कटवाहना ।

त्रिशूलं क्षुरिकां पाशं खेटं च दधती शुभा ॥

# २३. श्री छकार मातृकापीठ रूपिणी

**छं छयार्ता देवी - निर्जरा देवी**

**छं**

छनिर्झरारुन्धतीयं पीता मर्कटवाहना।
त्रिशूलं क्षुरिकां पाशं खेटं च दधती शुभा॥

—सिद्धशाबर तन्त्रे।

छ-कारो मुषली ज्ञेय एकनेत्रश्च शैलजे!।

(मन्त्राभिधानम्)

छ-श्छन्दनं सुषुम्ना च पशुः पशुपतिर्मतिः।
निर्मलं तरलं वह्निर्भूतमात्रा विलासिनी॥

एकमात्रा च वृषली द्विशिरा वामकूर्परः।
गोकर्णा लाङ्गली वामः कामकर्त्ता सदाशिवः॥
माता निशाचरः पायुर्व्विक्षतः स्थितिशब्दकः॥

(प्रकारान्तरमन्त्राभिधानम्।)

एकनेत्रश्च मुषली वामकूर्परगोद्युतिः।
त्रिविन्दुकस्तथाचारी छ-कारः प्रेक्षकाभिधः॥

(मातृका निघण्टुः)

---

छकारस्य समुत्पत्तिर्गोकर्णे परिकीर्तिता। जठरं पतितं यत्र तच्च पीठं महाद्भुतम्। (मेरुतन्त्रम्)

# २४. श्री जकार मातृकापीठ रूपिणी

## जं जया देवी - भोगदा देवी

## जं



जो भोगदा हि रक्तास्यात् त्रिणेत्रा सिंहवाहना।
चतुर्भुजा खड्ग खेट वराऽभय करान्विता॥

# २४. श्री जकार मातृकापीठ रूपिणी

### जं जया देवी - भोगदा देवी

## जं

जो भोगदा हि रक्ता स्यात् त्रिणेत्रा सिंहवाहना।
चतुर्भुजा खड्ग खेट वराभय करान्विता ॥

—सिद्धशाबर तन्त्रे।

जःशिवोऽर्च्चिर्महेशानि ! शूली च चतुराननः।

(मन्त्राभिधानम्)

जः शवो वानरः शूली भोगदा विजया स्थिरा।
ललदेवो जयो जेता धातकी सुमुखी विभुः ॥

लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृका धरा।
दीर्घबाहूरुचिर्हंसो नन्दी तेजः सुराधिपः ॥

जवनो वेगिता वामो मानवाक्षः सदात्मकः।
हृन्मारुतेश्वरो वेगी चामोदो मदविह्वलः ॥

(प्रकारान्तरमन्त्राभिधानम्।)

स्थिरो जयन्तो जयजः शूली च चतुराननः।
मणिबन्धगतो वामो ज कारो जपको मतः ॥

(मातृका निघण्टुः)

---

मातुरेश्वरसञ्ज्ञो यो जकारस्तत्र ते वलिः। प्रथमा पतिता पीठं शिवमन्त्रप्रकाशकम्। (मेरुतन्त्रम्)

## २५. श्री झकार मातृकापीठ रूपिणी

### झं झङ्कारिणी देवी - निर्झरनदी देवी

### झं



झो निर्झरनदी देवी शरन्मेघनिभांबुजा
पाशं वराऽभयौ धत्ते नक्रस्था शुभदा नृणाम् ।

# २५. श्री झकार मातृकापीठ रूपिणी

## झं झङ्कारिणी देवी - निर्झरनदी देवी

## झं

झो निर्झरनदी देवी शरन्मेघनिभांबुजा
पाशं वराभयौ धत्ते नक्रस्था शुभदा नृणाम् ॥

—सिद्धशाबर तन्त्रे ।

झः पाशी स्यादजेशश्च ञ-कारः सर्व्वकोऽङ्कुशी ।

(मन्त्राभिधानम्)

झो झङ्कारी गुहो झञ्झावायुः सत्यः षडुन्नतः ।
अजेशो द्राविणी नादः पाशी जिह्वा जलं स्थितिः ॥

विराजेन्द्रो धनुर्हस्तः कर्कशो नादजः कुजः ।
दीर्घबाहुर्बलो रूपमाकन्दितः सुचञ्चलः ॥

दुर्म्मुखो नष्ट आत्मा च विकटा कुचमण्डलम् ।
कलहंसप्रिया वामा अङ्गुलीमध्यपर्व्वकः ॥
दक्षहा साट्टहासश्च पापात्मा व्यञ्जनं स्वरः ॥

(प्रकारान्तरमन्त्राभिधानम् ।)

स्थितिः पाशी तथाहेशो वामाङ्गुलितलस्थितः ।
स्वस्तिकं खण्डसंज्ञश्च झ-कारो जान्तसंज्ञकः ॥

(मातृका निघण्टुः)

---

अट्टहासं झकारस्य स्थानं तत्र परा वलिः । पतिता तद्गणेशस्य मन्त्रसिद्धिकरं मतम् । (मेरुतन्त्रम्)

# २६. श्री ञकार मातृकापीठ रूपिणी

## ञं ज्ञानरूपा देवी - प्रबोधिनी देवी

## ञं



ञाख्या प्रबोधिनी शुभ्रा सिंहस्था चित्स्वरूपिणी ।
त्रिशूलांबुज चिन्मुद्राऽभयान्वित करा शुभा ॥

# २६. श्री ञकार मातृकापीठ रूपिणी

## ञं ज्ञानरूपा देवी - प्रबोधिनी देवी

## ञं

ञाख्या प्रबोधिनी शुभ्रा सिंहस्था चित्स्वरूपिणी।
त्रिशूलांबुज चिन्मुद्राऽभयान्वित करा शुभा॥

—सिद्धशाबर तन्त्रे।

मूले उपलब्धिः नास्ति।

(मन्त्राभिधानम्)

ञ-कारो बोधिनी विश्वा कुण्डली म(सु)खदो वियत्।
कौमारी नागविज्ञानी सव्याङ्गुलनखो बकः॥

सर्वेशश्चूर्णिता बुद्धिः स्वर्गात्मा घर्घरध्वनिः।
धर्मैकपादौ सुमुखी विरजा चन्दनेश्वरी॥
गायनः पुष्पधन्वा च वागात्मा च वराक्षिणी॥

(प्रकारान्तरमन्त्राभिधानम्।)

वामाङ्गुल्यग्रतः सिद्धिरङ्कुशः सर्व्वसंज्ञकः।
ज्ञप्रियो ह्यनुनासश्च ञ-कारश्च निरञ्जनः॥

(मातृका निघण्टुः)

---

विरजस्तु ञकारस्य स्थानं तत्र परा वलिः। समस्तविष्णुमन्त्राणां तत्र सिद्धिरदूरतः। (मेरुतन्त्रम्)

# २७. श्री टकार मातृकापीठ रूपिणी

## टं टङ्कहस्ता देवी - धारिणी देवी

## टं



टाख्या च धारिणी देवी शूल टंकवराऽभयान् ।
धत्ते मत्त मतंगस्था पाटलाभा सितांशुका ॥

